# श्री कुंजिका स्तोत्र

श्रीकुञ्जिकास्तोत्रम्

ॐ अस्य श्रीकुञ्जिकास्तोत्रमन्त्रस्य, सदाशिव ऋषिः, अनुष्टुप् छन्दः, श्रीत्रिगुणात्मिका देवता,
ॐ ऐं बीजम् , ॐ ह्रीं शक्तिः, ॐ क्लीं कीलकम् , मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ।

शिव उवाच

शृणु देवि प्रवक्ष्यामि कुञ्जिकास्तोत्रमुत्तमम् । येन मन्त्रप्रभावेण चण्डीजापः शुभो भवेत् ॥१॥
न कवचं नार्गलास्तोत्रं कीलकं न रहस्यकम् । न सूक्तं नापि वा ध्यानं न न्यासो न वार्चनम् ॥२॥
कुञ्जिकापाठमात्रेण दुर्गापाठफलं लभेत् । अतिगुह्यतरं देवि देवानामपि दुर्लभम् ॥३॥
गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति । मारणं मोहनं वश्यं स्तम्भनोच्चाटनादिकम् ॥४॥
पाठमात्रेण संसिद्ध्येत् कुञ्जिकास्तोत्रमुत्तमम् ।

ॐ श्रूँ श्रूँ श्रूँ शं फट् ऐं ह्रीं क्लीं ज्वल उज्ज्वल प्रज्वल ह्रीं ह्रीं क्लीं स्त्रावय स्त्रावय शापं नाशय नाशय
श्रीं श्रीं श्रीं जूं सः स्त्रावय आदय स्वाहा ॥५॥

ॐ श्लीं हूँ क्लीं ग्लां जूं सः ज्वल उज्ज्वल मन्त्रं प्रज्वल हं सं लं क्षं फट् स्वाहा ।
नमस्ते रुद्ररूपायै नमस्ते मधुमर्दिनि ॥६॥
नमस्ते कैटभनाशिन्यै नमस्ते महिषार्दिनि । नमस्ते शुम्भहन्त्र्यै च निशुम्भासुरसूदिनि ॥७॥
नमस्ते जाग्रते देवि जपे सिद्धिं कुरुष्व मे । ऐङ्कारी सृष्टिरूपिण्यै ह्रीङ्कारी प्रतिपालिका ॥८॥
क्लीं काली कालरूपिण्यै बीजरूपे नमोऽस्तु ते । चामुण्डा चण्डरूपा च यैङ्कारी वरदायिनी ॥९॥
विच्चे त्वभयदा नित्यं नमस्ते मन्त्ररूपिणि । धां धीं धूं धूर्जटेः पत्नी वां वीं वागीश्वरी तथा ॥१०॥
क्रां क्रीं क्रूं कुञ्जिका देवि श्रां श्रीं श्रूं मे शुभं कुरु । हूं हूं हूङ्काररूपिण्यै ज्रां ज्रीं ज्रूं भालनादिनी ॥११॥
भ्रां भ्रीं भ्रूं भैरवी भद्रे भवान्यै ते नमो नमः ।

ॐ अं कं चं टं तं पं सां विदुरां विदुरां विमर्दय विमर्दय
ह्रीं क्षां क्षीं स्त्रीं जीवय जीवय त्रोटय त्रोटय जम्भय जम्भय
दीपय दीपय मोचय मोचय हूं फट् ज्रां वौषट् ऐं ह्रीं क्लीं
रञ्जय रञ्जय सञ्जय सञ्जय गुञ्जय गुञ्जय
बन्धय बन्धय भ्रां भ्रीं भ्रूं भैरवी भद्रे
सङ्कुच सङ्कुच त्रोटय त्रोटय म्लीं स्वाहा ॥१२॥

पां पीं पूं पार्वती पूर्णा खां खीं खूं खेचरी तथा । म्लां म्लीं म्लूं मूलविस्तीर्णा कुञ्जिकास्तोत्रहेतवे ॥१३॥
अभक्ताय न दातव्यं गोपितं रक्ष पार्वति । विहीना कुञ्जिकादेव्या यस्तु सप्तशतीं पठेत् ॥१४॥
न तस्य जायते सिद्धिर्ह्यरण्ये रुदितं यथा ॥१५॥

# अथ कालक स्तोत्र

## ॥ अथ कीलकस्तोत्रम् ॥

ॐ अ श्रीकीलकमन्त्र शिवऋषिः, अनुष्टुप् छन्दः, श्रीमहासरस्वती देवता, श्रीजगदम्बाप्रीत्यथ सप्तशतीपाठाङ्गत्वेन जपे विनियोगः ।

ॐ नमश्चण्डिकायै ।

ॐ विशुद्धज्ञानदेहाय त्रिवेदीदिव्यच षे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमाधधारिणे ॥ १॥

सवमेतद्विजानीयान्मन्त्राणामपि कीलकम् ।
सोऽपि क्षेममवाप्नोति सततं जप्यतत्परः ॥ २॥

सिद्ध्यन्त्युच्चाटनादीनि वस्तुनि सकलान्यपि ।
एतेन स्तुवतां देवीं स्तोत्रवृन्देन भक्तितः ॥ ३॥

न मन्त्रो नौषधं त      न किञ्चिदपि विद्यते ।
विना जप्येन सिद्ध्येत्तु सवमुच्चाटनादिकम् ॥ ४॥

समग्राण्यपि सेत्स्यां      लोकशङ्कामिमां हरः ।
कृत्वा निमन्त्रयामास सवमेवमिदं  शुभम् ॥ ५॥

स्तोत्रं वै चण्डिकायास्तु त      गुप्तम् चकार सः ।
समाप्तिन च पुण्य      तां यथावन्नियन्त्रणाम् ॥ ६॥

सोऽपि क्षेममवाप्नोति सवमेव न संशयः ।

कृष्णायां वा चतुदश्यामष्टम्यां वा समाहितः ॥ ७॥
ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ।

इत्थं रूपेण कीलेन महादेवेन कीलितम् ॥ ८॥

यो निष्कीलां विधायैनां नित्यं जपति संस्पु टम् ।
स सिद्धः स गणः सोऽपि गन्धव  जायते नरम् ॥ ९॥

न चैवाप्यटतस्त     भयं क्वापीह जायते ।
नापमृत्युवशं याति मृतो मोक्षमा ुयात् ॥ १०॥

ज्ञात्वा प्रार     कुर्वीत न कुवाणो विनश्यति ।
ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः ॥ ११॥

सौभाग्यादि च यत्किञ्चिद् दृश्यते ललनाजने ।
तत्सव तत्प्रसादेन तेन जाप्यमिदम् शुभम् ॥ १२॥

शनैस्तु जप्यमानेऽस्मिन् स्तोत्रे सम्पत्तिरुच्चकैः ।
भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥ १३॥